# ॐ

# श्रीगणेशाय नमः

दयौदर्यादिगुणालंकृत श्रीमहाराजाधिराजरणवीरसिंहानुकम्पया

# कलापवृत्तकं सन्धिप्रकरणम्

मतिप्रवीणरायबहादुरस्वरायस्योद्यमेन श्रीनगरान्तर्यन्त्रालये यन्त्रितम्

संवत् १९३२

# ॐ

# श्रीगणेशाय नमः ॥

ॐ श्रीमहाबालात्रिपुरसुन्दर्यै नमः ॐ सिद्धो वर्णसमाम्ना
यः वर्णानाम् अकारादीनां यः समाम्नायः क्रमेणपाठः सिद्धः
प्रसिद्धः लोके इति किं तेन उपदिष्टेन आविद्वदङ्गनागोपाल
बालपर्यन्तं यावत् वर्णाः ५१ अआइई उऊऋॠ ऌॡए
ऐ ओऔअंअः कखगघङ चछजझञ टठडढण तथदध
न पफबभम यरलव शषसह वर्णसंज्ञया क्व प्रयोज
नम् सर्वत्र ॥ तत्र चतुर्दशादौ स्वराः ॥ तत्र प्रसिद्धे वर्णसमा
म्नाये आदौ ये चतुर्दश वर्णास्ते स्वरसंज्ञा भवन्ति स्वराः
१४ अआइई उऊऋॠ ऌॡएऐ ओऔ स्वरसंज्ञया क्व प्र।
योजने रो रेलोपं स्वरश्च पूर्वो दीर्घः इत्यादिषु ॥ दश समा।
नाः ॥ तत्र प्रसिद्धे वर्णसमाम्नाये आदौ ये दश वर्णास्ते

समानसंज्ञा भवन्ति समानाः १० अआइईउऊऋॠऌॡ
समानसंज्ञया क्व प्रयोजनम् समानः सवर्णे दीर्घीभव
ति परश्च लोपम् इत्यादिषु "तेषां द्वौ द्वौ वर्णावन्योन्यस्य सव
र्णौ" तेषां दशानां समानानां मध्यात् यौ द्वौ द्वौ वर्णौ
तौ वर्णावन्योन्यस्य परस्परं सवर्णसंज्ञौ भवतः सवर्णाः १०
अआइई उऊऋॠ ऌॡ वर्णस्य सवर्णाः अकारस्य
आकारः सवर्णः आकारस्य अकारः सवर्णः इकारस्य
ईकारः सवर्णः ईकारस्य इकारः सवर्णः उकारस्य ऊका
रः सवर्णः ऊकारस्य उकारः सवर्णः ऋकारस्य ॠकारः
सवर्णः ॠकारस्य ऋकारः सवर्णः ऌकारस्य ॡकारः
सवर्णः ॡकारस्य ऌकारः सवर्णः सवर्णसंज्ञया क्व
प्रयोजनं समानः सवर्णे दीर्घीभवति इत्यादिषु "पूर्वो
ह्रस्वः" तयोः द्वयोः द्वयोः सवर्णयोः यः यः पूर्वः सः ह्र
स्वसंज्ञो भवति ह्रस्वाः ५ अइउऋऌ ह्रस्वसंज्ञया क्व।
प्रयोजनम् ह्रस्वोऽम्बार्थानामित्यादिषु पूर्वस्य लघुसं
ज्ञापि वक्तव्या लघवः ५ अइउऋऌ लघुसंज्ञया क्व प्र
योजनम् नामिनश्चोपधाया लघोः इत्यादिषु "परो दीर्घः"
तयोः द्वयोः द्वयोः सवर्णयोः यः यः परः स दीर्घसंज्ञो
भवति दीर्घाः ५ आईऊॠॡ दीर्घसंज्ञया क्व प्रयोजन
म् दीर्घमामि सनौ वित्यादिषु परस्य गुरुसंज्ञापि वक्त
व्या गुरवः ५ आईऊॠॡ गुरुसंज्ञया क्व प्रयोजनम् गु
रोश्च निष्ठायां सेट् इत्यादिषु स्वरो वर्णवर्जो नामी अव
र्णः अकार आकारौ तौ वर्जयित्वा शिष्टाः स्वराः नामि

नसंज्ञा भवंति नामिनः १२ इईउऊऋॠऌॡएऐओऔ
नामिसंज्ञया का प्रयोजनम् नामिनः स्वरे इत्यादिषु प
कारादीनि सन्ध्यक्षराणि एकारादीनि वर्णानि संध्यक्ष
संज्ञानि भवंति संध्यक्षराणि ४ एऐओऔ सन्ध्यक्षरसंज्ञ
या का प्रयोजनम् सन्ध्यक्षराणानामाकारो विकरणोः इ
त्यादिषु कादीनि व्यञ्जनानि ककारादीनि वर्णानि व्यञ्ज
नसंज्ञानि भवंति व्यंजनानि ३३ कखगघङ चछजझञ
ञ टठडढण तथदधन पफबभम यरलव शषसह
व्यंजनसंज्ञाया का प्रयोजनम् मोऽनुस्वारं व्यञ्जने इत्यादिषु
+ ते वर्गाः पंचपंचशः ते कादयो वर्णाः पञ्चशः पञ्च प
ञ्चाक्षराणि भूत्वा पञ्च वर्गा उच्यन्ते वर्गाः ५ कचटतप
वर्गाः २५ कवर्गः कखगघङ चवर्गः चछजझञ टव
र्गः टठडढण तवर्गः तथदधन पवर्गः पफबभम वर्ग
संज्ञया का प्रयोजनम् वर्गे वर्गान्त इत्यादिषु + वर्गाणां
प्रथमद्वितीयाः शषसाश्चाघोषाः + वर्गाणां ये प्रथमद्वि
तीयाः वर्णाः तथा शषसाश्च ते अघोषसंज्ञा भवंति अघो
षाः १३ कख चछ टठ तथ पफ शषस अघोषसंज्ञया का
प्रयोजनम् अघोषे प्रथम इत्यादिषु घोषवंतोऽन्ये + अघोषे
भ्यः ये अन्ये वर्णाः ते घोषवन्संज्ञा भवन्ति घोषवन्तः २०
गघङ जझञ डढण दधन बभम यरलवह घोषवन्सं
ज्ञया का प्रयोजनम् अकारो दीर्घं घोषवति इत्यादिषु + अ
नुनासिका ङञणनमाः + ङञणनमाः वर्णाः अनुनासि
कसंज्ञया का प्रयोजनम् अतोऽन्त्योऽस्वरादनुनासिकान्तस्य

का संज्ञा भवंति अनुनासिकाः ५ ङञणनमाः अनुनासि

इत्यादिषु + यन्तस्था यरलवाः + यरलवाः वर्णाः अन्त स्थसंज्ञा भवन्ति अन्तस्थाः च यरलवा अन्तस्थसंज्ञया क्व प्रयोजनम् सपरस्वरायाः सम्प्रसारणं मन्तस्थाया मित्यादिषु + ऊष्माणः शषसहाः + शषसहवर्णाः ऊष्मसंज्ञा भवति ऊष्माणः च शषसह ऊष्मसंज्ञया क्व प्रयोजनम् नास्य पार्श्वकोयं योवारम्भ इत्यादिः + अः इति विसर्जनीयः अकारात्परं बिन्दुद्वयं विसर्जनीयसंज्ञं भवति विसर्जनीयाकीदृशः स्तनवद्बालवत्साया बालिकाकुचयुग्मवत् नेत्रवत्कालसर्पस्य विसर्गः परिकीर्तितः विसर्जनीयसंज्ञया क्व प्रयोजनम् विसर्जनीयस्थेऽह्नेवाक्षा मित्यादिषु + ≍क इति जिह्वामूलीयः + ककारात्पूर्वो वर्णो जिह्वामूलीय संज्ञो भवति जिह्वामूलीयः कीदृशः यवाकृतिवर्णः जिह्वामूलीय संज्ञया क्व प्रयोजनम् कखयोः जिह्वामूलीयं नवा इत्यादिषु + ≍प उपध्मानीयः पकारात्पूर्वो वर्णः उपध्मानीयसंज्ञो भवति उपध्मानीयः कीदृशः हस्तिकवाटसदृशः उपध्मानीयसंज्ञया क्व प्रयोजनम् पफयोरुपध्मानीयं नवेत्यादिषु + अं इत्यनुस्वारः + अ इत्यत्रयो बिन्दुः सोऽनुस्वारसंज्ञो भवति अनुस्वारसंज्ञया क्व प्रयोजनम् मोऽनुस्वारं व्यंजने इत्यादिषु + सर्वपरयोरर्थोपलब्धोपदम् + सर्वस्यादिकस्य परस्य च स्यादेः तथा सर्वस्य धातोः परस्य च त्यादेः यः समुदायः एकीभावः स पदसंज्ञो भवति अर्थोपलब्धो सत्या पदसंज्ञया क्व प्रयोजनम् अस्मदस्मदोः पदे

पदान्त षष्ठी चतुर्थी द्वितीया सुवस्नसौ इत्यादिषु + अ
नतिक्रमयन् विश्लेषयेत् वर्णानामेकत्र युक्तानां अति
क्रमं विपर्ययमकुर्वन् विश्लेषं कुर्यात् येनैव क्रमेण व
र्णा विश्लिष्यन्ते तेनैव क्रमेण वर्णाः संयुज्यन्ते इति परि
भाष्यते अनियमे नियमः परिभाषा + व्यञ्जनम
स्वरं परं वर्णं नयेत् अस्वरं स्वररहितं यत् व्यञ्जनं
तत्परं वर्णं नयेत् प्रापयेत् व्यञ्जनस्वरयोश्च संयोग
सिद्ध्यर्थं वचनम् त्वमत्र सत्कर्म अद्यमिह + लोको
पचाराद्ग्रहणसिद्धिः लोकोपचारात् पूर्वाचार्यशास्त्रा
दनुक्तस्य ग्रहणस्य शास्त्रस्य परिभाषादेः सिद्धिर्नि
ष्पत्तिर्भवति लघ्वोपसंहताद्य इदंशास्त्रे नोक्तास्ते अ
न्यशास्त्रादवसातव्याः इति लघुवृत्तौ

## सन्धिप्रकरणे संज्ञापादः प्रथमः

ॐ समानः सवर्णे दीर्घीभवति परश्च लोपम् समानो
वर्णः सवर्णे परे दीर्घीभवति परश्च लोपमापद्य
ते साषाढकम् दधीदम् मधूदकं होतृषिः गह्व ।
कारः + सतिचानित्यमितिज्ञापकात् + द्वयोः ह्रस्वयोः
दीर्घः परलोपौ वक्तव्यौ दण्डाग्रम् दधीदं मधू
दकं तृतीयादौ तु परादिः इतिज्ञापकात् द्वयो दीर्घयोः
दीर्घः परलोपौ वक्तव्यौ गङ्गायतनम् मालायतने गौ
रीश्वरः + समानग्रहणादिति विद्यमानात् + द्वयोः ह्रस्वदी
र्घयोः दीर्घः परलोपौ वक्तव्यौ गंगात्र कुमारीश्च वधूरः
+ अवर्णो इवर्णोव + अवर्णः अकार आकारौ इव

र्णे इकारे ईकारेच परे एकारोभवति परस्य लोपमाप
द्यते नचेदं सेयम् उमेद्गे + उवर्णेओ + अवर्णः अ
कार आकारौ उवर्णे उकारे ऊकारेच परे ओकारोभ
वति परस्य लोपः नचोदकम् गङ्गोदकम् उमोद्
गे + ऋवर्णेअर् अवर्णः अकार आकारौ ऋवर्णे ऋ
कारे ॠकारेच परे अर् भवति परस्य लोपः नवर्णे स
र्षिः नवकारः + लवर्णे अल् + अवर्णः अकार आ
कारौ लृवर्णे लृकारे लॄकारेचपरे अल्भवति परलोप
श्च नवल्कारः खट्वल्कारः + एकारेऐऐकारेच + अव
र्णः अकार आकारौ एकारे ऐकारेच परे ऐकारोभव
ति परलोपश्च नवैडिका खट्वैतिकायनं उमैषा + ओ
कारे औऔकारेच अवर्णः अकार आकारौ ओकारे औका
रेचपरे औकारोभवति परलोपश्च नवौदनः खट्वौपगवः
+ इवर्णेयमसवर्णेनचपरलोपः इवर्णः इकार ईका
रौ असवर्णे स्वरे परे यत्वमापद्यते परलोपश्चन भवति
दध्यत्र नद्येषा + वमुवर्णः + उवर्णः उकार ऊका
रा असवर्णे स्वरे परे वत्वमापद्यते परलोपश्चनभव
ति मध्वत्र वध्वाद्यो + रमृवर्णः + ऋवर्णः ऋकार
ॠकारौ रत्वमापद्यते असवर्णे स्वरे परे परस्य लोपश्चो
नभवति + पित्रर्थः मात्रर्थः राकृतिः + रमॢवर्णः +
लृवर्णः लृकार लॄकारौ लत्वमापद्यते असवर्णे स्व
रे परे परस्य लोपश्चोन भवति लनुबन्धः लाकृतिः + एअ
य् + एकारः अय् भवति स्वरे परे नयनः उदयः ॥

ऐ आय् ऐकारः आय् भवति स्वरेपरे रायौ रायः + ओ
अव् + ओकारः अव् भवति स्वरे परे धेनवः पटवः +
औ आव् + औकारः आव् भवति स्वरे परे ताविह ता
विह् अयादीनां यवलोपः पदान्ते नवा लोपेन प्रकृ
तिः + अय् आय् अव् आव् एते अयादयः एषाम
यादीनां पदान्तेस्थितानां यो यकार वकारो तयोर्लो
पोभवति नवा विकल्पेन लोपेतुकृते प्रकृतिः यथास्व
रूपंभवति पुनःसन्धिकार्यं प्राप्नेम भवतीत्यर्थः क
आसनेवा कयासने कस्माइदेवा कस्मायिदं इन्द इ
तिवा इन्द्रविति असाइहवा असाविह् + एदोत्परःप
दान्ते लोपमकारः + पदान्तेवर्तमानौयौ एदौतौ
ताभ्यांपरः अकारः लोपंप्राप्नोति अभेत्र वायोत्र +
नव्यञ्जनेस्वराः सन्धेयाः + व्यञ्जने परे स्वराः सन्धे
याः सन्धानयाः नभवंति दण्डहस्तः दधिपीतम्
मधुभाजनम् गौरीगृहं वधूमुखम् मातृमाण्डले

## इतिलघुस्वरसन्धिप्रकरणसमा
## प्तोद्वितीयः २ ॥

ओंओदन्ता अइउ आनिपाताः स्वरेप्रकृत्याः + ओदन्ता
ओकारान्ताः येनिपाता तथा अइउ आएते स्वरेपरे प्र
कृत्या यथास्वरूपं भवति सन्धिकृतां विकृतिं नाप
द्यन्ते नोअत्र अहोआश्चर्यं अअपेहि इ इन्द्रंपश्य उ उ
त्तिष्ठ आएवंतु मन्यसे आएवंतुकिलतत् + द्विवचा
मैनौ + अनौओकाररहितं द्विवचनं प्रकृत्याभवति ॥

स्वरेपरे अमीअत्र वायुरिह शालेअत्र मालेआनय प
चेतेइह अनावितिकिं हलावत्र बहुवचनममी + अ
मीइति यद्बहुवचनम् तत्स्वरेपरे प्रकृत्याभवति अ
मीअश्वाः अमीआदित्याः बहुवचने इतिकिम् अम
त्र + अनुपदिष्टाश्च + इहशास्त्रे ये अनुपदिष्टाः अ
नुक्ताः प्लुतोपप्लुतादयः ते स्वरे परे प्रकृत्याभवं
ति देवदत्ता ३ इह यज्ञदत्ता ३ अतिष्ठ + एकमात्रोभ
वेद्ध्रस्वो द्विमात्रोदीर्घउच्यते त्रिमात्रस्तुप्लुतोज्ञेयो व्य
ञ्जनंत्वर्धमात्रकम् चाषोवदत्येकमात्र द्विमात्रंवाय
सोब्रवीत् त्रिमात्रंतुशिखीब्रूयात् नकुलश्चार्धमात्र
कम् इतिलघुवृत्तौसन्धिप्रकरणे

ओदन्तपादस्तृतीयः ३

गेवर्गप्रथमाः पदान्ताः स्वरघोषवत्सु तृतीयान्
वर्गाणांये प्रथमाः कचटतपाः पदान्ताः पदस्यान्तभू
ताः ते स्ववर्गीयास्तत्र तृतीयानापद्यन्ते स्वरेषु
परेषु घोषवत्सुच वागत्र अजिदत्र षडानय तदिद
त्रिष्टुबियम् वाग्गतिः अज्गतिः षड्गच्छन्ति तदु
मनम् त्रिष्टुब्गायत्री + पञ्चमे पञ्चमास्तृतीया
न्वा + वर्गप्रथमाः पदान्ताः पञ्चमे परे स्ववर्गी
यान्पञ्चमान्वा पद्यन्ते तृतीयान्वा वाङ्मय
ंवा वाग्मयंवा षण्मात्रंवा षड्मात्रम् षण्नयनंवा
षड्नयनं तन्नीतिः वा तद्नीतिः त्रिष्टुम्मिनोति वा त्रि
ष्टुब्मिनोति + वर्गप्रथमेभ्यः शकारः स्वरय ॥

वरपरः छकारेन वा + वर्गप्रथमेभ्यः पदान्तेभ्यः
परः शकारः स्वरपरः मपरः वपरः रेफपरश्च
छकारं आपद्यते नवा विकल्पेन वाक्छूरः वा
वाक्शूरः अच्छ्यामा वा तच्श्यामा षट्छ्यामा वा
षट्श्यामा तच्छ्वेतं वा तच्श्वेतम् त्रिष्टुप्छ्रूयते वा ।
त्रिष्टुप्श्रूयते + तेभ्य एव हकारः पूर्वचतुर्थं नवा
तेभ्यः पदान्तेभ्यः वर्गप्रथमेभ्यः परः हकारः पू
र्वस्य वर्गस्य सस्थानं चतुर्थमापद्यते नवा वि
कल्पेन वाग्घीनः वा वाग्हीनः अज्झलानि वा अ
ज्हलानि षड्ढलानि वा षड्हलानि तद्धितं वा तद्हितं
त्रिष्टुब्भृतं वा त्रिष्टुब्हृतम् + पररूपं नकारो ल
चटवर्गेषु + नकारः पदान्तः लकारे चवर्गे ट
वर्गे च परे पररूपमापद्यते तल्लुनाति तच्छिनो
ति तच्छादयति तज्जयति तज्झषति तञ्ञकारः
तड्डीयते तड्ढकारः उड्डीनः उड्ढौकते तण्णकारः
+ चेशो + नकारः पदान्तः ञत्वमापद्यते चे शे ।
कारे तच्छाद्यं तच्श्मशानम् ङणना ह्रस्वोपधाः
स्वरे द्विः + ङणना ह्रस्वोपधाः स्वरे परे द्विर्भवा
ति उदङ्ङत्र सुगण्णास्ते पचन्निह + नोन्तश्चछयो
सकारमनुस्वारपूर्वम् + नकारः पदान्तः च
छयोः परयोः अनुस्वारपूर्वं सकारमापद्यते स
चपरितनयनाभावात्पूर्वस्य वर्णस्योपरि लिख्यते
भवांश्छिनोति भवांश्छादयति टठयोः षकारम्

नकारः पदान्तः टठयोः परयोः अनुस्वारपूर्वं षकारमापद्यते भवांष्टीकते भवांष्ठक्कुरः + तथयोस्सकारं + नकारःपदान्तः तथयोः परयोः अनुस्वारपूर्वं सकारमापद्यते भवांस्तनोति भवांस्थुडति + लेलम् + नकारः पदान्तः ले लकारे परे अनुस्वारपूर्वं लकारमापद्यते भवांल्लुनाति भवांल्लिखति + जझञशाकारेषञकारम् + नकारःपदान्तः जकारे झकारे ञकारे शकारेचपरे ञकारमापद्यते भवाञ्जयति भवाञ्झषति भवाञ्ञकारः भवाञ्शेते + शिच्छंवा + नकारः पदान्तः शिशिकारे परे च्छंवा आपद्यते महाञ्छूरः महाञ्च्छूरः महाञ्शूरः + डढणपरस्तुणकारम् + नकारः पदान्तः + डकारे ढकारे णकारेच परेणकारमापद्यते महाण्डीनः महाण्ढौकते महाण्णकारः + मोनुस्वारं व्यञ्जने + मकारः पदान्तः व्यञ्जनेपरे अनुस्वारमापद्यते त्वंहससि त्वंरमसे + वर्गेतद्वर्गपंचमंवा + नकारः पदान्तः वर्गेपरे तस्यवर्गस्य यो वर्गः तत्पञ्चमं वा आपद्यते त्वङ्करोषिवा त्वंकरोषि त्वञ्चरसिवा त्वंचरसि त्वण्टीकसेवा त्वंटीकसे त्वन्तरसिवा त्वंतरसि त्वम्पासिवा त्वंपासि

## इतिलघुवृत्तौसन्धिप्रकरणेवर्णापादः चतुर्थः ४

ओंविसर्जनीयश्छेवाशे + विसर्जनीयः पदान्तः

चकारे छकारे परे शाकारमापद्यते कश्चरति कश्छा
दयति + टठेवाषम् + विसर्जनीयः पदान्तः टेवा ठे
वा परे षकारमापद्यते कष्टीकते कष्ठकारः + ते
थेवासम् + विसर्जनीयः पदान्तः तेवा थेवापरे स
कारमापद्यते कस्तनोति कस्थुडति + कखयोर्जि
ह्वामूलीयनवा + विसर्जनीयः पदान्तः कखयोः
परयोः जिह्वामूलीयमापद्यते नवा विकल्पेन
क ्करोति वा कःकरोति कखनतिवा कःखनति
+ पफयोरुपध्मानीयंनवा + विसर्जनीयः पदा
न्तः पफयोः परयोः उपध्मानीयं आपद्यते नवा वि
कल्पेन कपातिवा कःपाति कफलतिवा कःफल
ति + शेषसेवावापररूपम् विसर्जनीयः पदान्तः
शेवा षेवा सेवा परे पररूपमापद्यते नवा विक
ल्पेन कश्शेतेवा कःशेते कष्षष्टःवा कःषष्टः
कस्साधुर्वा कःसाधुः + उमकारयोर्मध्ये + द्व
योः अकारयो र्मध्ये यः विसर्जनीयः सउत्वं आप्नोति
कोर्थः सोत्र + अघोषवतोश्च + अकारघोषव
तोर्मध्ये यो विसर्जनीयः सचउत्वंआप्नोति कोगतः
योधावति + अपरोलोप्योन्य स्वरेयंवा + अकारात्परः
विसर्जनीयः लोप्यो भवति यत्वं चापद्यते अन्यस्मि
न्नकारादौ स्वरे परे क आस्तेवा कयास्ते सइहवा सयि
ह रुदउपरिवा रुदयुपरि + आभोभ्या मेव मेव
स्वरे + आकारभोशाब्दाभ्यां परः विसर्जनीयः लो

यं प्राप्नोति यत्वं चापद्यते एवमेव सर्वस्मिन् स्वरे परे
देवा आहुर्वा देवा याज्ञः भोऽइदंवा भोयिदं + भोघ
वतिलोपम् + आकारभोशाहाभ्यां परः विसर्जनी
यः लोपं प्राप्नोति घोषवति परे देवा यान्ति भोयज
+ नामिपरो रम् + नामिनः परः विसर्जनीयः
रत्वं प्राप्नोति हविः स्वत्नः + घोषवत्स्वरपरः ना
मिनः परः विसर्जनीयः रत्वं प्राप्नोति घोषवत्स्वर
परयोः अग्निर्गतः अग्निरत्र पटुर्गतः पटुरत्र + र
प्रकृतिरनामिपरोऽपि + रप्रकृतिः रेफप्रकृतिः रे
फस्य स्थाने यः विसर्जनीयः विहितः सः अनामिपरो
ऽपि रत्वं प्राप्नोति घोषवत्स्वरपरयोः अन्तर्गतः अ
न्तरत्र प्रातर्गतः प्रातरत्र स्वर्गतः स्वरत्र पुनर्गतः
पुनरत्र पुनर्गतः पुनरत्र + एषसपरो लोप्यो व्यञ्जने
+ एष् सशाभ्यां परःविसर्जनीयः लोप्यो भवति
व्यञ्जने परे एष चरति स चरति एष ददाति स ददा
ति + न विसर्जनीयलोपे पुनः सन्धिः + विसर्जनीय
स्य लोपे कृते सति पुनः सन्धिकार्यं प्राप्तं न भवति
यथाः क आद् स इद् + रो रे लोपं स्वरश्च पूर्वो
दीर्घः + रः रेफः रेफे परे लोपं प्राप्नोति पूर्वश्च स्वरो
सम्पद्यते अग्नीरलति इन्दू रमते + द्विर्भावं स्वरपर
छकारः + स्वरात्परः छकारः द्विर्भावं प्राप्नोति ।
इहच्छाया देवच्छत्रम् इति लघुवृत्तौ
सन्धिप्रकरणे विसर्जनीयपादः पञ्चमः

चवाहाहैवमोऽहं हो उताहो हो अहो अथो इति निपातोऽव्ययम्
च वा ह अह एव नो अहं हो उताहो हो अहो अथो एषामे
कादशानां चादीनां शब्दानां एकैकोनिपातसंज्ञो भवति
अव्ययसंज्ञायाः प्रयोजनं क ओदन्ता अ इ उ आ निपाताः
स्वरे प्रकृत्या अव्ययाच्चेत्यादिषु + अन्तः स्वः प्रातः पु
नः योऽव्ययः + अन्तरादयः षट् अव्ययसंज्ञा भवन्ति ।
अपिधानः समुच्चयार्थः अन्तः रम्यः अन्तस्तिष्ठति अ
न्तरागमः अन्तः षष्ठ एवं स्वरादय उदाहार्याः + प्रप
रानिनिरदुस्संव्यवान्वपर्यभ्यधिप्रतिस्वाङत्यप्यपोपा
पसर्गाः + प्र परा नि निर् उत् दुर् सम् वि अव अनु परि
अभि अधि प्रति सु आङ् अति अपि अप उप एते विंशा
तिरुपसर्गसंज्ञा भवन्ति अव्ययाच्च प्रयोजनं उपस
र्गेकत्वश्चेत्यादिषु + अन्वादयः कर्मप्रवचनीयाः + एषा
मध्यात् अन्वाद्या एकादश कर्मप्रवचनीयसंज्ञा भवति
प्रयोजनं कर्मप्रवचनीयैश्चेत्यादिषु + परकार्ये विकार्यो
दिः + परिभाषेयम् परस्य कार्ये कर्तव्ये आदिरेव वर्णो
विकारी भवति नान्य इति परिभाष्यते आसीनः + पूर्वका
र्येऽन्त्य इष्यते + पूर्वस्य कार्ये कर्तव्ये अन्त्यो वर्णो विकारी
इष्यते + सः यः + क्वचित्सर्वे परे सर्वौ + क्वचित्सर्वे परौ
सर्वौ विकारिणौ भवतः इतः इह + संस्कार्ययोगसाध
नम् + योगस्य सूत्रवाक्यस्य साधनं पूरणं षट्पादेय
नदन्यसूत्रेभ्यः संस्कार्यमनुवर्तनीयं यथाऽजसीत्यस्य योग
स्य पूरणं अकारो दीर्घमिति पूर्वम … र्यते इति ।
लघुहैमो संधिप्रक … षः ८

पदा षष्ठी चतुर्थी द्वितीया स्ववस्थैसौ इत्यादिषु + अ
नतिक्रमय न्विश्लेषयेत् वर्णानामेकत्र युक्तानां अति
क्रमं विपर्ययमकुर्वन् विश्लेषं कुर्यात् येनैव क्रमेण व
र्णो विश्लेष्यन्ते तेनैव क्रमेणैव वर्णाः संयुज्यन्ते इति परि
भाष्यते अनियमे नियमः परिभाषा + व्यञ्जनम
स्वरं परं वर्णं नयेत् अस्वरं स्वररहितं यत् व्यञ्जनं
तत्परं वर्णं नयेत् प्रापयेत् व्यञ्जनस्वरयोश्च संयोग
सिद्ध्यर्थं वचनम् त्वमत्र सत्कर्म यद्दामिह + लोको
पचाराद्ग्रहणसिद्धिः लोकोपचारात् पूर्वाचार्यशास्त्रा
दनुक्तस्य ग्रहणस्य शास्त्रस्य परिभाषादेः सिद्धिर्नि
ष्पत्तिर्भवति लक्षणोपलक्षितादय इत्यादयो लोकात्सु
न्यायाश्चादेव स्मारणीयाः इति लघुवृत्तौ

## सन्धिप्रकरणे संज्ञापादः प्रथमः

ॐ समानः सवर्णे दीर्घीभवति परश्च लोपम् समानो
वर्णः सवर्णे परे दीर्घीभवति परश्च लोपमापद्य
ते मायाढकम् दधीदं मधूदकं होतॄषिः गम्लृ।
कारः + सति चानि टीतिज्ञापकात् + दयोः ह्रस्वयोः
दीर्घपरलोपौ वक्तव्यौ दण्डाग्रम् दधीदं मधू
दकं तृतीयादौ तत्परादिः इति ज्ञापकात् ह्रस्वदीर्घयोः
दीर्घपरलोपौ वक्तव्यौ खट्वायतनम् मालायतनं गौ
रीश्वरः + समानग्रहणादिति विद्यमानात् + दयोः ह्रस्वदी
र्घयोर्दीर्घपरलोपौ वक्तव्यौ गंगात्र कुमारीयं वधूरः
+ आवर्णे इवर्णेप + अवर्णः अकार आकारौ इव

र्णे इकारे ईकारेच परे एकारोभवति परश्चलोपमाप
द्यते नवेदं सेयम् उमेद्दने + उवर्णेओ + अवर्णः अ
कार आकारौ उवर्णे उकारे ऊकारेच परे ओकारोभ
वति परश्च लोप्यः नवोदकम् गङ्गोदकम् उमोद्ध
ने + ऋवर्णेअर् अवर्णः अकार आकारौ ऋवर्णे ऋ
कारे ॠकारेच परे अर् भवति परश्चलोप्यः नवर्त्ती स
र्द्धिः नवकारः + लवर्णेअल् + अवर्णः अकार आ
कारौ ऌवर्णे ऌकारे ॡकारेचपरे अल्भवति परलोप
श्च नवल्कारः खट्वल्कारः + एकारेऐकारेच + अव
र्णः अकार आकारौ एकारे ऐकारेच परे ऐकारोभव
ति परलोपश्च नवैडिका खट्वैतिकायनं उमैषा + ओ
कारे औकारेच अवर्णः अकार आकारौ ओकारे औका
रेचपरे औकारोभवति परलोपश्च नवौदनः खट्वौपगवः
+ इवर्णोयमसवर्णेनचपरलोप्यः इवर्णः इकार ईका
रौ असवर्णे स्वरे परे यत्वमापद्यते परलोप्योन भवति
दध्यत्र नद्येषा + वुवर्णः + उवर्णः उकार ऊका
रौ असवर्णे स्वरे परे वत्वमापद्यते परलोप्योनभव
ति मध्वत्र वध्वास्यो + रमृवर्णः + ऋवर्णः ऋकार
ॠकारौ रत्वमापद्यते असवर्णे स्वरे परे परश्च लोप्यो
नभवति + पित्रर्थः मात्रर्थः राह्णातिः + लऌवर्णः +
ऌवर्णः ऌकार ॡकारौ लत्वमापद्यते असवर्णे स्व
रे परे परश्चलोप्योन भवति लत्रबन्धः लाकृतिः + एअ
य् + एकारः अय् भवति स्वरे परे अयनः वृहयः ॥

ऐ आय् ऐकारः आय् भवति स्वरे परे रायौ रायः + ओ
अव् + ओकारः अव् भवति स्वरे परे येनवः पटवः +
औ आव् + औकारः आव् भवति स्वरे परे तावित् मा
वित् अयादीनां यवलोपः पदान्ते नवा लोपेतु प्रकृ
तिः + अय् आय् अव् आव् एते अयादयः एषाम् ।
यादीनां पदान्ते स्थितानां यो यकार वकारौ तयोर्लो
पो भवति नवा विकल्पेन लोपे तु कृते प्रकृतिः यथास्व
रूपं भवति पुनः सन्धिकार्यं प्राप्नेन भवतीत्यर्थः क
आसने वा कयासने कस्माइदं वा कस्मायिदं इन्द इ
आसने वा कयासने कस्माइदं वा कस्मायिदं इन्द इ
तिवा इन्दवितित असाइन्द्रवा असावित् + एदोत्परः प
दान्ते लोपमकारः + पदान्ते वर्तमानायो एदौतो
ताभ्यांपरः अकारः लोपं प्राप्नोति अग्नेत्र वायोत्र +
नव्यञ्जने स्वराः सन्धेयाः + व्यञ्जने परे स्वराः सन्धे
याः सन्धातव्याः न भवंति दण्डहस्तः दधिशीतम्
मधुभाजनम् गौरीगृहं वधूसुखम् मातृमण्डलं

## इति लघुकौमुद्यां सन्धिप्रकरणे समा नपादो द्वितीयः २ ॥

ओं ओदन्ता आइउ आ निपाताः स्वरे प्रकृत्याः + ओदन्ता
ओकारान्ताः ये निपाता तथा अइउ आ एते स्वरे परे प
कृत्या यथास्वरूपं भवति सन्धिकृतां विकृतिं नाप
द्यंते नो अत्र अहो आश्चर्यं अ अपेहि इ इन्द्रं पश्य उ उ
त्तिष्ठ आ एवं तु मन्यसे आ एवं नु किं लनत् + द्विवचा
मैना + अनौ ओकारवर्जितं द्विवचनं प्रकृत्या भवति ॥

स्वरे परे अमी अत्र वायू इह शाले अत्र माले आनय प
चेते इह अनादिति किं कृत्वा अत्र बहुवचनममी + अ
मीइति यद् बहुवचनम् तत्स्वरे परे प्रकृत्या भवति अ
मी अश्वाः अमी आदित्याः बहुवचने इति किम् अमु
त्र + अनुपदिष्टाश्च + इह शास्त्रे ये अनुपदिष्टाः अ
नुक्ताः प्लुतोपध्मानीयादयः ते स्वरे परे प्रकृत्या भव
ति देवदत्ता ३ इह यज्ञदत्ता ३ उत्तिष्ठ + एकमात्रो भ
वेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते त्रिमात्रस्तु प्लुतो ज्ञेयो व्य
ञ्जनं त्वर्धमात्रकम् चाषो वदत्येकमात्रं द्विमात्रं वाय
सोऽब्रवीत् त्रिमात्रस्तु शिखी ब्रूते नकुलस्त्वर्धमात्र
कम् इति लघुवृत्तौ संधिप्रकरणे
ऽदमपादस्तृतीयः ३

॥ वर्गप्रथमाः पदान्ताः स्वरघोषवत्सु तृतीयान्
वर्गाणां ये प्रथमाः कचटतपाः पदान्ताः पदस्यान्तभू
ताः ते स्ववर्गीयास्ततो तृतीयानापद्यन्ते स्वरेषु
परेषु घोषवत्सु च वागत्र अजिद् षडानय तदिद
त्रिष्टुबियम् वाग्गतिः अज्गतिः षड्गच्छन्ति तद्ग
मनम् त्रिष्टुब्गायत्री + पञ्चमे पञ्चमांस्तृतीया
न्वा + वर्गप्रथमाः पदान्ताः पञ्चमे परे स्ववर्गी
यास्ततः पञ्चमानापद्यन्ते तृतीयान्वा वाङ्मधु
रा वा वाग्मधुरा अश्मांश्च वा अन्नात्रम् षण्णयनं वा
षड्नयनं तन्नीतिः वा तद्नीतिः त्रिष्टुम्मिनोति वा त्रि
ष्टुब्मिनोति + वर्गप्रथमेभ्यः शकारः स्वरय ॥

वयवर छकारं नवा + वर्गप्रथमेभ्यः पदान्तेभ्यः
परः शकारः स्वरपरः यमपरः वपरः रेफपरश्च
छकारमापद्यते नवा विकल्पेन वाक्छूरः वा
वाक्शूरः अच्छ्यामा वा तच्श्यामा षट्छ्यामा वा
षट्श्यामा तच्छ्लोकेन वा तच्श्लोकेनम् विप्रुट्छ्रयते वा।
विप्रुट्श्रयते + तेभ्यएव हकारः पूर्वचतुर्थं नवा
तेभ्यः पदान्तेभ्यः वर्गप्रथमेभ्यः परः हकारः पू
र्वस्य वर्णस्य सम्बन्धिनं चतुर्थमापद्यते नवा वि
कल्पेन वाग्घीनः वा वाग्हीनः अज्झलानि वा अ
ज्हलानि षड्ढलानि वा षड्हलानि तद्धितं वा तद्हितं
त्रिष्टुब्भूतं वा त्रिष्टुब्हूतम् + पररूपं नकारो ल
चटवर्गेषु + नकारः पदान्तः लकारे चवर्गे ट
वर्गे च परे पररूपमापद्यते तल्लुनाति तच्चिनो
ति तच्छादयति तज्जायति तज्झषति तञ्ञकारः
तट्टीकते तट्ठक्कुरः उड्डीनः उड्ढौकते तण्णकारः
+ चेशो + नकारः पदान्तः ञत्वमापद्यते शे शा।
कारे तञ्चाश्चं तञ्शमशानम् ङणना ह्रस्वोपधाः
स्वरे द्विः + ङणना ह्रस्वोपधाः स्वरे परे द्विर्भवा
ति उदङ्ङत्र सुगण्णास्ते पचन्निह + नोन्तश्चछयो
श्शकारमनुस्वारपूर्वम् + नकारः पदान्तः च
छयोः परयोः अनुस्वारपूर्वं शकारमापद्यते स
त्वपरिनयनाभावात्पूर्वस्य वर्णस्योपरि लिख्यते
भवांश्चिनोति भवांश्छादयति टतयोः सकारम्

नकारः पदान्तः टठयोः परयोः अनुस्वारपूर्वं षका
रमापद्यते भवांष्टीकते भवांष्ठक्कुरः + तथयोस्स
कारं + नकारः पदान्तः तथयोः परयोः अनुस्वारपू
र्वं सकारमापद्यते भवांस्तनोति भवांस्थुडति +
लेलम् + नकारः पदान्तः ले लकारे परे अनुस्वार
पूर्वं लकारमापद्यते भवांल्लुनाति भवांल्लिखति +
जझञशाकारेषु ञकारम् + नकारः पदान्तः जकारे
झकारे ञकारे शाकारे च परे ञकारमापद्यते भवा
ञ्जयति भवाञ्झषति भवाञ्ञकारः भवाञ्शेते +
शिञ्छं वा + नकारः पदान्तः शिशिकारे परे ञ्छं वा
आपद्यते महाञ्छूरः महाञ्च्छूरः महाञ्शूरः +
डढणपरस्तु णकारम् + नकारः पदान्तः + ड
कारे ढकारे णकारे च परे णकारमापद्यते महाण्डी
नः महाण्ढौकते महाण्णकारः + मोनुस्वारं व्यञ्ज
ने + मकारः पदान्तः व्यञ्जने परे अनुस्वारमाप
द्यते त्वंहससि त्वंरमसे + वर्गे तद्वर्गपंचमं वा +
मकारः पदान्तः वर्गे परे तस्य वर्गस्य यो वर्गः तस्य
पंचमं वा आपद्यते त्वङ्करोषि वा त्वंकरोषि त्वञ्चर
सि वा त्वंचरसि त्वण्टीकसे वा त्वंटीकसे त्वन्तरसि वा
त्वंतरसि त्वम्पासि वा त्वंपासि

इति लघुकौमुद्यां सन्धिप्रकरणे वर्गपा
दः चतुर्थः ४

ॐ विसर्जनीयस्य छे वा शे + विसर्जनीयः पदान्तः

ल- ३· ८

चकारे छकारे परे शकारमापद्यते कश्चरति कश्छा।
दयति + टठेवाषम् + विसर्जनीयः पदान्तः टेवा ठे
वा परे षकारमापद्यते कष्टीकते कष्ठकारः + ते
थेवासम् + विसर्जनीयः पदान्तः तेवा थेवापरे स
कारमापद्यते कस्तनोति कस्थुडति + कखयोर्जि
ह्वामूलीयंनवा + विसर्जनीयः पदान्तः कखयोः
परयोः जिह्वामूलीयमापद्यते नवा विकल्पेन
कह्करोति वा कःकरोति कव्खनतिवा कःखनति
+ पफयोरुपध्मानीयंनवा + विसर्जनीयः पदा
न्तः पफयोः परयोः उपध्मानीयं आपद्यते नवा वि
कल्पेन कप्पातिवा कःपाति कफ्फलतिवा कःफल
ति + शेषसेवावापररूपम् विसर्जनीयः पदान्तः
शेवा षेवा सेवा परे पररूपमापद्यते नवा विक
ल्पेन कश्शेतेवा कःशेते कष्षण्डःवा कःषण्डः
कस्साधुर्वा कःसाधुः + उमकारयोर्मध्ये + ह
योः अकारयोर्मध्ये यः विसर्जनीयः सउत्वं प्राप्नोति
कोर्थः सोत्र + अघोषवतोश्च + अकारघोषव
तोर्मध्ये यो विसर्जनीयः सचउत्वंप्राप्नोति कोगतः
योयावति + अपरोलोप्योन्यस्वरेयंवा + अकारादपर
विसर्जनीयः लोप्यो भवति यत्वं वा पद्यते अन्यस्मि
न्नकारादौ स्वरे परे कआहवा कयाह सआहवा स
ह सइउपरिवा सइउपरि + आभोभ्यामेव मे
स्वरे + आकारभोषाह्वाभ्यां परः विसर्जनीयः

पं प्राप्नोति यत्वंचापद्यते एवमेवसर्वस्मिन् स्वरेपरे
देवा आहुः देवायाहुः भो इदं वा भोयिदं + घोष
वतिलोपम् + आकारभोभगोभ्यां परः विसर्जनी
यः लोपं प्राप्नोति घोषवतिपरे देवायान्ति भोयज्ञ
+ नामिपरोरम् + नामिनः परः विसर्जनीयः
रत्वं प्राप्नोति स्वधीः स्वतूः + घोषवत्स्वरपरः ना
मिनः परः विसर्जनीयः रत्वं प्राप्नोति घोषवत्स्वर
परयोः अग्निर्गतः अग्निरत्र पटुर्गतः पटुरत्र + र
प्रकृतिरनामिपरोपि + रप्रकृतिः रेफप्रकृतिः रे
फस्य स्थानेयः विसर्जनीयः विदितः सअनामिपरो
पि रत्वं प्राप्नोति घोषवत्स्वरपरयोः अन्तर्गतः अ
न्तरत्र प्रातर्गतः प्रातरत्र स्वर्गतः स्वरत्र पुनर्गतः
पुनरत्र पुनर्गतः पुनरत्र + एषसपरलोपोव्यञ्जने
+ एषसशब्दाभ्यां परः विसर्जनीयः लोपोभवति
व्यञ्जनेपरे एषचरति सचरति एषददाति सददा
ति + नविसर्जनीयलोपेपुनःसन्धिः + विसर्जनीय
स्य लोपेकृतेसति पुनस्सन्धिकार्यंप्राप्तंनभवति
र्थः कआद सइह + रोरेलोपंस्वरश्चदी
दीर्घः + रः रेफः रेफेपरेलोपंप्राप्नोति पूर्वश्चदीर्घः
सम्पद्यते अग्नीरथति इन्दूरमते + द्विर्भावंस्वरप
छकारः + स्वरात्परः छकारः द्विर्भावंप्राप्नोति ।
लव्याख्या देवच्छत्रम्        इतिलघुवृत्तौ
सन्धिप्रकरणेविसर्जनीयपादः पञ्चमः

इत्यादिषु + अन्तस्था यरलवाः + यरलवाः वर्णाः अन्त
स्थसंज्ञा भवन्ति अन्तस्थाः ४ यरलवा अन्तस्थसंज्ञया
का प्रयोजनम् सपरस्वरायाः सम्प्रसारणमन्तस्याया
मित्यादिषु + ऊष्माणः शषसहाः + शषसहवर्णाः
ऊष्मसंज्ञा भवति ऊष्माणः ४ शषसह ऊष्मसंज्ञया
का प्रयोजनम् नाह्य पार्श्वकार्य योरारभ्य इत्यादः
+ अः इति विसर्जनीयः अकारात्परं बिन्दुद्वयं विसर्जनी
यसंज्ञं भवति विसर्जनीयः कीदृशः कुम्भवद्बालवत्सा
स्य बालिकाकुचयुग्मवत् नेत्रवत्कालसर्पस्य विसर्गः
परिकीर्तितः विसर्जनीयसंज्ञया का प्रयोजनम् विस
र्जनीयश्चेच्छेवाशा मित्यादिषु + ᳵक इति जिह्वामूलीयः
+ ककारात्पूर्वो वर्णः जिह्वामूलीय संज्ञो भवति जि
ह्वामूलीयः कीदृशः यवाकृतिवर्णः जिह्वामूलीयसंज्ञया
का प्रयोजनम् कखयोः जिह्वामूलीयेनवा इत्यादिषु +
ᳲप उपध्मानीयः पकारात्पूर्वो वर्णः उपध्मानीयसंज्ञो भ
वति उपध्मानीयः कीदृशः हस्तिकवाटसदृशः उपध्मा
नीयसंज्ञया का प्रयोजनम् पफयो रुपध्मानीयेनवेत्या
दिषु + अं इत्यनुस्वारः + अं इत्यत्र यो बिन्दुः सोऽनुस्वारसं
ज्ञो भवति अनुस्वारसंज्ञया का प्रयोजनम् मोऽनुस्वारो व्य
ञ्जने इत्यादिषु + सुप्तिङन्तं पदम् + सुबन्तस्याति
ङन्तस्य पदस्य च स्यादेः तथा तिङन्तस्य धातोः पदस्य च त्यादेः
यः समुदायः एकीभावः स पदसंज्ञो भवति सुप्तिङन्तं
न्तो सत्या पदसंज्ञया का प्रयोजनम् ऊष्मदन्त्यो पदे

पंप्राप्नोति यथा बंवाप्यते एवमेवसर्वस्मिन् स्वरेपरे देवा आहुवां देवायाज्ञः भोइदंवा भोयिदं + घोष वतिलोपम् + आकारभोभाभ्यां परः विसर्जनी यः लोपंप्राप्नोति घोषवतिपरे देवायान्ति भोयज्ञ + नामिपरोरम् + नामिनः परः विसर्जनीयः रत्वंप्राप्नोति स्त्रीः स्वन्तुः + घोषवत्स्वरपरः ना मिनः परः विसर्जनीयः रत्वं प्राप्नोति घोषवत्स्वर परयोः अग्निर्गतः अग्निरत्र पटुर्गतः पटुरत्र + र प्रकृतिरनामिपरोपि + रप्रकृतिः रेफप्रकृतिः रे फस्य स्थानेयः विसर्जनीयः विदितः सच्चनामिपरो पि रत्वं प्राप्नोति घोषवत्स्वरपरयोः अन्तर्गतः अ न्तरत्र प्रातर्गतः प्रातरत्र स्वर्गतः स्वरत्र पुनर्गतः पुनरत्र पुनर्गतः पुनरत्र + एषसपरलोपोव्यञ्जने + एषसभ्याम्यां परःविसर्जनीयः लोपोभवति व्यञ्जनेपरे एषचरति सचरति एषदधाति सदधा ति + नविसर्जनीयलोपेपुनःसन्धिः + विसर्जनीय स्य लोपेकृतेसति पुनस्सन्धिकार्यंप्राप्तंनभवती त्यर्थः कआद सइह + रेरेलोपंस्वरश्चदी र्घः + रःरेफः रेफेपरेलोपंप्राप्नोति पूर्वश्चदीर्घः सम्पद्यते अग्नीरहति इन्दूरमते + हिर्भावस्वरपर ढकारः + स्वरात्परः ढकारः हिर्भावंप्राप्नोति । लत्सच्छाया देवच्छत्रम् इतिलघुवृत्तौ

सन्धिप्रकरणेविसर्जनीयपादःपंचमः

नसंज्ञा भवति नामिनः १२ इईउऊऋॠऌॡएऐओऔ
नामिसंज्ञया किं प्रयोजनम् नामिनः स्वरे इत्यादिषु ए
कारादीनि सन्ध्यक्षराणि एकारादीनि वर्णानि संध्यक्षर
संज्ञानि भवंति संध्यक्षराणि ४ एऐओऔ सन्ध्यक्षरसंज्ञ
या किं प्रयोजनम् सन्ध्यक्षराणामाकारो विकरणे इ
त्यादिषु कादीनि व्यञ्जनानि ककारादीनि वर्णानि व्यञ्ज
नसंज्ञानि भवंति व्यंजनानि ३३ कखगघङ चछजझ
ञ टठडढण तथदधन पफबभम यरलव शषसह।
व्यंजनसंज्ञाया किं प्रयोजनम् मोऽनुस्वारं व्यञ्जने इत्यादिषु
* ते वर्गाः पंच पंचशः ते कादयो वर्णाः पञ्चशः पञ्च प
ञ्चाक्षराणि भूत्वा पञ्चवर्गा उच्यन्ते वर्गाः ५ कचटतप
वर्णाः २५ कवर्गः कखगघङ चवर्गः चछजझञ टवा
र्गः टठडढण तवर्गः तथदधन पवर्गः पफबभम वर्ग
संज्ञया किं प्रयोजनम् वर्गे वर्गान्त इत्यादिषु * वर्गाणां
प्रथमद्वितीयाः शषसाश्चाघोषाः * वर्गाणां ये प्रथमद्वि
तीयाः वर्णाः तथा शषसाश्च ते अघोषसंज्ञा भवंति अघो
षाः १३ कख चछ टठ तथ पफ शषस अघोषसंज्ञया किं
प्रयोजनम् अघोषे प्रथमा इत्यादिषु घोषवन्तोऽन्ये * अघो
षेभ्यः ये अन्ये वर्णाः ते घोषवन्तसंज्ञा भवन्ति घोषवन्तः २०
गघङ जझञ डढण दधन बभम यरलवह घोषवत्सं
ज्ञया किं प्रयोजनम् अकारो दीर्घं घोषवति इत्यादिषु * अ
नुनासिका ङञणनमाः * ङञणनमाः वर्णाः अनुनासि
कसंज्ञया किं प्रयोजनम् अतोऽत्यनुस्वारोऽनुनासिकान्तस्य

समानसंज्ञा भवति समानाः १० अआइईउऊऋॠऌॡ
समानसंज्ञया किं प्रयोजनम् समानः सवर्णे दीर्घीभव
ति परश्च लोपम् इत्यादिषु" तेषां द्वौ द्वौ वर्णावन्योन्यस्य सव
र्णौ" तेषां दशानां समानानां मध्यात् यौ द्वौ द्वौ वर्णौ
तौ वर्णावन्योन्यस्य परस्परं सवर्णौ संज्ञौ भवतः सवर्णाः १०
अआइई उऊऋॠ ऌॡ कस्य कस्य सवर्णाः अकारस्य
आकारः सवर्णः आकारस्य अकारः सवर्णः इकारस्य
ईकारः सवर्णः ईकारस्य इकारः सवर्णः उकारस्य ऊका
रः सवर्णः ऊकारस्य उकारः सवर्णः ऋकारस्य ॠकारः
सवर्णः ॠकारस्य ऋकारः सवर्णः ऌकारस्य ॡकारः
सवर्णः ॡकारस्य ऌकारः सवर्णः सवर्णसंज्ञया किं
प्रयोजनं समानः सवर्णे दीर्घीभवति इत्यादिषु" पूर्वो
ह्रस्वः" तयोः द्वयोः द्वयोः सवर्णयोः यः यः पूर्वः सः ह्र
स्वसंज्ञो भवति ह्रस्वाः ५ अइउऋऌ ह्रस्वसंज्ञया किं।
प्रयोजनम् ह्रस्वोम्बार्थाना मित्यादिषु पूर्वस्य लघुसं
ज्ञापि वक्तव्या लघवः ५ अइउऋऌ लघुसंज्ञया किं प्र
योजनम् नामिनश्चोपधाया लघोः इत्यादिषु" परो दीर्घः"
तयोः द्वयोः द्वयोः सवर्णयोः यः यः परः स दीर्घसंज्ञो
भवति दीर्घाः ५ आईऊॠॡ दीर्घसंज्ञया किं प्रयोजन
म् दीर्घमामि सनौ वित्यादिषु परस्य गुरुसंज्ञापि वक्त
व्या गुरवः ५ आईऊॠॡ गुरुसंज्ञया किं प्रयोजनम् गु
रोश्च निष्ठायां सेट इत्यादिषु स्वरोऽवर्णवर्जो नामी अव
र्णः अकारआकारौ तौ वर्जयित्वा शेषाः स्वराः नामि

ॐ सिद्धशब्दोऽत्र मङ्गलार्थः साधितक्रमनिष्पत्तये वा
वर्णग्रहणन्तु अक्षराणां वर्णसंज्ञाज्ञापनार्थम्
समाम्नायग्रहणं [illegible] वादत्वादनिष्प्राप्ते तस्यापवादो [illegible]
भवति॥ इत्यर्थं [illegible]नेन ॥१

तत्र प्रागद्यधिकारः तेन [illegible] इत्यादौ वर्णस्य काप्यौ नतु सम
दायस्य, चतुर्दशादौ स्वरास्तेनादिष्टं भवति [illegible] परि
भाषया [illegible] सन्निदीर्घः, अदौ इति विस्पष्टार्थं॥
[illegible] ॐ [illegible]॥ स्वं सर्वत्र॥ २ अत्रा
[illegible]: संसाध्ययोगनिपद्यते

# ॐ श्रीगणेशाय नमः ॥

ॐ श्रीमहात्रिपुरसुन्दर्यै नमः ओं सिद्धो वर्णसमाम्ना
यः वर्णानाम् अकारादीनां यः समाम्नायः अभ्यासपाठः सिद्धः
प्रसिद्धः लोके इति, किं तेन उपदिष्टेन आविद्वदङ्गनागोपाल
बालपर्यन्तं यावत् वर्णाः ४९ अआइई उऊऋॠ ऌॡए
ऐ ओऔअंअः कखगघङ. चछजझञ टठडढण तथदध
न पफबभम यरलव शषसह वर्णसंज्ञया क प्रयोज
नम् सर्वत्र॥ तत्र चतुर्दशादौ स्वराः॥ तत्र प्रसिद्धे वर्णसमा
म्नाये आदौ ये चतुर्दश वर्णास्ते स्वरसंज्ञा भवन्ति स्वराः
१४ अआइई उऊऋॠ ऌॡएऐ ओऔ स्वरसंज्ञया क प्र
योजनं स्वरे लोपं स्वरः स्वरपरो दीर्घ इत्यादिषु॥ दश समा
नाः॥ तत्र प्रसिद्धे वर्णसमाम्नाये आदौ ये दश वर्णास्ते